II

दैवज्ञाः संगिरन्ते तरणिगतिमिलामण्ड-
लापर्यधस्तान्
मेरोः पौराणिकास्ते परित इति मत-
द्वन्द्वमास्ते विरुद्धम्।
क्षोणीशानूपसिंह स्फुरति महसि ते
सर्वतस्त्यायमाने
मृष्टश्रीसूर्यरोचिर्निवहसहचरे तत्र साधुः
समाधिः॥

2. Astronomers speak of the passage of the sun above and below the orb of the earth, and Pauranikas as around Meru. These two views are contradictory. O king Anupasimha, when your lustre is shining spreading in all directions, moving along with the pure rays of the sun, there is an adequate answer.

*a. b.* मण्डलोपर्यधस्तान्मेरोः इत्यत्र र्यध इत्यनयोर्मध्ये एकमक्षरमनपेक्षितं प्रथमतो विन्यस्तम्। स्तान्मेरोः इत्यनयोर्मध्ये त्रीणि चाक्षराणि। तेषां चतुर्णां संमार्जनं च पश्चात् कृतम्।
*b.* स्ते इति भूरिशः वि इति समस्तं च भ्रष्टे।
*c.* रतिमह इति तेस इति च अस्फुटानि वर्तन्ते।
*d.* (मृषश्री) अनन्तरं रोचिरित्यतः पूर्वं द्वे अक्षरे भ्रष्टे।
स्रग्धरा वृत्तम्।

III

नीरूपोऽयं प्रतापः कविकुलवचनै रूप-
मापाद्यताम्र
सम्राजामित्यकाण्डे दधति कलकलं
काव्यमर्माविधो ये।
धीरैर्भाषेलिमास्ते भणत जलनिधौ
पश्चिमाद्रेः खरांशु-
र्ह्रीणः कस्मादकस्माद्विकलकरकुलो
मज्यति म्लानबिम्बः॥

3. The prowess of kings, though devoid of colour, attains विताम्र colour through the words of the hosts of poets—those who strike on the vital parts of poetry make such a huge noise. They speak irresponsibly. Say. Why does the sun, for no palpable reason, shedding his rays, with his disc faded, sink in shame in the ocean from the western mountains.

प्रतापस्यातिताम्रं रूपं दृष्ट्वैव ह्रीणः सूर्यः समुद्रे मज्जति। अतः प्रतापस्य रूपं न केवलं कविकल्पितम्।
स्रग्धरा वृत्तम्।

## IV

ये तावत् त्वत्प्रतापं दिनपतिवलयेनोपमिन्वन्ति धीराः
कीरास्ते पूर्वशैलीकुशलमतिभुवो नूत्नवाचंयमाश्च ।
चण्डत्वन्मण्डलाग्रप्रचुररुचिभृता तेजसा ते हताङ्गा
भित्त्वा मार्तण्डबिम्बं यदपतनभयां वीरभूमिं भजन्ते ॥

4. Those bold people who compare your prowess with the disc of the sun are human parrots, who produce good ideas from old methods, but who are silent in new ways. For those who are killed by the prowess bearing the lustre on the top of your fierce sword, pierce through the disc of the sun and go to the land of the heroes from which there is no fear of a fall.

*d.* (वीरभूमीं)

यस्याः पतनभयं नास्ति यां गत्वा न प्रतिनिवृत्तिर्भवति सा अपतनभया । वीराणां भूमिः उत्तमो लोकः । त्वन्मण्डलेन भिन्नाः सूर्यबिम्बं भिनत्तीति उपमित्यनौचित्यस्य मूलम् ।

स्रग्धरा वृत्तम् ।

V

त्वत्सन्ध्यायन्त्रशृङ्गं तुरगखुरदलोद्धूतचूर्णातिपूर्णं
शोणत्वन्नेत्रकोणप्रतिघ शुचिकणव्रातविध्मातमन्तः।
उत्तप्तश्रीलजाम्बूनदमुदितचलच्चारुचाम्पेयवार-
व्यासङ्गिद्योतमोजः किरति किल सदा वर्धमानं क्रमेण॥

(किंचिदस्फुटः)

*a.* (तुरगखुररजोद्धान्त) (त्वत्संधा)
त्वत्सन्ध्यायन्त्रशृङ्गं सदा वर्धमानं ओजः किरति इत्यन्वयः।
स्रग्धरा वृत्तम्।

VI

स्वान्तं दुर्हृद्वधूनां ज्वलयति रमणप्राणविश्लेषदुःखे
स्थेम्नः प्रोन्नीतशीतद्युतितरलशिलाशीलमश्रान्तमेव ।
तासां बाष्पापगाभिः स्फुरति रहयते हेतिमुच्छ्वासवातै-
र्भावत्कोऽनूपसिंह क्षितिपतितरणे चित्रमोजःकृशानुः ॥

6. When there is the sorrow due to separation from their husbands, the fire of your prowess blazes up the hearts of the wives of your enemies which from their steadfastness is inferred without any effort, as having the nature of moon-stones. With their tears as a river, it begins to glow. With the wind of their heaving sighs, it loses its flames. O Anupasimha, the royal sun, it is a wonder.

*b.* (प्रोन्नीतगीतबलतलशिलाशील)

*d.* पति इति प्रथमं उपेक्षितम् । पश्चात् पत्रस्य दक्षिण प्रान्ते निक्षिप्तम् ।

सूर्यस्य वह्निः सूर्यकान्तं ज्वलयति नचन्द्रकान्तम् । आपगायां वह्निर्नश्यते । वाते सति स्फुरति । अत्र तु सर्वमन्यथा ।
स्रग्धरा वृत्तम् ।

## VII

आजि त्वद्वाजिधारापरिधुतरजसा विद्विषा रक्तपङ्के
त्वत्तेजोरक्तपङ्केरुहमजनितमा यन्नृपानूपसिंह ।
राजन् प्रद्योतनं त्वां विकसति कलयत् किंघनामुच्यमानं
वन्दिव्याहारभृङ्गैर्भृतसमितिरसं तद्भृशं लालसीति ॥

7. In the blood pool of your enemies mixed with the dust raised by your horses in battle, your prowess is born as a red lotus, O king Anupasimha; O king, this opens up taking you to be the sun left free from evil clouds; it shines filled with joy of war as with honey brought about by the words of bards as of bees.

*c.* ( राज प्रद्योतनं ) ( कलयत्किंचनामुच्यमानं )
प्रद्योतनः सूर्यः । कुत्सितो घनः किंघनः । तेन आमुच्यमानम् ।
स्रग्धरा वृत्तम् ।

## VIII

आविष्टो जगतीसरः सममसौ शक्तिद्विपीभिस्ततो
विद्विट्कीर्तिकुमुद्वतीं करबलादामूलमुन्मूलयन् ।
प्रान्तस्थोज्ज्वलजीवने च जनयन् मालिन्यविक्षोभणं
क्रीडत्येवमनूपसिंह भवतो रक्तः प्रतापद्विपः ॥

8. Entering the pond of the world, accompanied by she-elephants which are your might, plucking out with the strength of the hands the lily which is the fame of (your) enemies creating loss of lustre and confusion in the lives of those who are neutral (in the water along the shore)—thus plays, O Anupasimha, your prowess as an elephant.

*d.* (भवते)

प्रान्तस्थाः उदासीनाः तटस्थाः । कूलस्थमिति जलपक्षे ।
जीवनं जीवितं जलं वा ।
शार्दूलविक्रीडितं वृत्तम् ।

IX

यद्रूढिर्भुवनत्रये कलयति स्थानं यदीयः करो
मौलौ यच्च वहन्ति राजकुलजास्तद्वै मुहुः शुश्रुम ।
सोऽयं को महसां भरः क्षितिपतेरित्येव संप्राश्रिते
त्वामेवोत्तरयामि भेदभणनं दत्तोपचारं वदन् ॥

9. Whose rise is in the three worlds, whose hands attain a proper station, which those born in royal families carry on their heads—I often hear of such a thing. Which is this heap of royal lustre? When only thus far is asked, I indicate you as a reply to all these riddles pointing out at the same time the resemblances leading to the identification.

c. को महसां इति प्रथमं विलिख्य ह म इत्यनयोर्विनिमयाय २, १ इति संख्याचिह्ने तदुपरि यथाक्रमं विन्यस्ते ।
शार्दूलविक्रीडितं वृत्तम् ।

X

आरुह्य क्षितिभृच्छिरांसि जलधीनुत्तीर्य दिक्कुञ्जरा-
नास्फाल्य प्रणमय्य वासवमुखांस्त्वा नो विहातुं क्षमः ।
श्रान्तस्ते प्रियसैनिकः शुभकरः किं हेमदण्डच्छला-
च्छत्रं त्वय्युपगृह्य चामरमरुल्लीलारसं शीलति ॥

प्रतापावतारः पञ्चमः समाप्तः ।

10. Rising on the heads of kings, crossing oceans, kicking the elephants of the quarters, making Indra and others to bend, yet unable to abandon you, your prowess, as a dear soldier who is tired, bringing auspiciousness, holding an umbrella over you in the guise of a gold rod—is it that he enjoys the wind from the Chamaras?

*b.* (वासवमुखास्त्वां)
शार्दूलविक्रीडितं वृत्तम् ।

# ६

# दानावतारः ।

I

मत्तः सर्वाणि फलानि मार्गणजनो गृह्णाति गृह्णान्यहं
तानीति स्वमनोरथं विफलयन् योऽनीयतादातृताम् ।
सोऽयं कल्पतरुः फलानि कलयन् पूर्णो दरीदृश्यते
क्षोणीमण्डलमण्डन त्वयि महामानोन्नते दातरि ॥

1. Those who seek receive all the fruits from me; so I bear them—though this be his wish, he has been led to the condition of non-giver. The Kalpa tree in this state is seen standing holding fruits and full, when you the ornament of the earth is here as giver.

*b.* (योनायतादातृताम्)
अहमर्थिनां कृते फलानि गृह्णानि इति कल्पतरोर्मनोरथः विफलो भवति । कल्पतरुश्च अदातुर्दशां प्रापितः । यतः सर्वे त्वत्त एवाभिलषितं प्राप्नुवन्ति ।

शार्दूलविक्रीडितं वृत्तम् ।

II

भुक्त्वा वेश्म वनप्रसारि सतृणं संक्षोभ्य संशोष्य च
प्रायो मानसजीवनं विदलयन् मूलान् मुदम्भोजिनीम्
दारिद्र्यद्विरदव्रजो वनजुषा हुङ्कारहर्षस्पृशा
भिन्नो दानमृगाधिपेन भवतः पद्माकुटीकन्दरात् ॥

2. Having enjoyed the house extending in the forest full of grass, gradually agitating and drying up the mind as water, scattering from the root the lotus pond of joy, such herd of poverty as of wild elephants, has been broken up by your gift as by a lion, giving joy to those who reside in the forest, with his roar coming from the abode of Sreebhagavati as from a den.

*a.* संशोष्य इत्यत्र शो इति प्रथममुपेक्षितम्। पश्चात् पत्रस्योपरिभागे निविष्टम्।

मानसं मन एव जीवनं जलम्। भवतो दानमेव मृगाधिपः सिंहः।

शार्दूलविक्रीडितं वृत्तम्।

III

भूम्नेऽभूदनयोर्विवादखुरली दानाञ्जलिश्लोकयोः
प्रेम्णो गौरवसंभवात्तव मम क्षोणीन्द्र नाधीनयोः ।
पूर्वस्यात्र सुतैः समीय सुकृतैर्भूयः शुभे पूरिते
स्थानस्थो ध्वनिमातनोऽथ परः स्वारोपणीयः परम् ॥

3. The quarrel between the offering of gifts and my verses, both nadhina (you are not adhina or below anyone and I have no adhina or one below me), became conducive to greatness on account of love and dignity. When for the former auspiciousness has been filled being associated with good deeds generated here, the latter sitting in its position made a noise being fit to be properly placed.

तव दानाञ्जलेः मम श्लोकस्य च विवाद खुरली ।
विवादः प्रायो न भूम्ने । अत्र तु तथा ।
शार्दूलविक्रीडितं वृत्तम् ।

IV

अग्रास्तोः कमलाकरस्य नृपते रागार्धबिम्बोदया
इत्युक्तेन कराम्बुजेन किरताप्यश्रान्तमिष्टं रसम् ।
विश्वक्पूरितदानसा                मान्न नो नुद्यतां
दारिद्र्योत्तपन                तो न मोमुद्यता ॥

(शिथिलश्चास्पष्टश्च)

शार्दूलविक्रीडितं वृत्तम् ।

V

निर्भिन्नाः खलु ते जनाः समगमन्
येऽन्योन्यमालिङ्गनै-
र्यस्मिन् जाग्रति शाखिनो द्विजवरा याताः
परा दुःस्थितिम् ।
अध्वन्याः प्रतियान्ति न स्म किमसौ
दारिद्र्यदावानलः
शान्तश्चित्रमनूपसिंह भवतो
हस्तोन्मितेनाम्भसा ॥

5. Such people who had come into close embrace have been broken up, when he is awake. Great Brahmins who belong to one Vedic School or other (Sakha) (also trees and birds) came to great grief. Those on the path do not return at all. How is such poverty, resembling wild fire, brought to submission, O Anupasimha, by the water measured by your palm? What a wonder!

शाखिनो वृक्षाः । द्विजवराः पक्षिश्रेष्ठाः । शाखिनो वेदशाखामधीतवन्तः द्विजवराः ब्राह्मणश्रेष्ठाः ।
शार्दूलविक्रीडितं वृत्तम् ।

VI

चेतःकैरवमोदने परिचिते विद्वच्चकोरोच्चयै-
रालोकादिह लोकलोचनसुखेऽमन्दामृतस्यन्दिनि ।
क्षोणीचन्द्र महोदयं श्रितवति त्वय्येष राजत्करे
दारिद्र्योद्धुरधर्ममर्मदलनत्रासो निरासं गतः ॥

6. Giving joy to the mind as to lilies, known to learned men as to nightingales, giving pleasure to the eyes of the people by sight, shedding nectar fast, O moon of the earth, when you with your hands (rays) shining, begin to rise in greatness, there has been expelled the fear of poverty as of summer, breaking the vital parts.

शार्दूलविक्रीडितं वृत्तम् ।

VII

विद्वद्वागमृतस्रुतिस्तव मुदो नेत्राञ्चलान्दोलनं
सैषा हेतुपरंपरा तदनु मे पूर्णं पदं सम्पदाम् ।
औचित्यं तदिदं तथापि च धिया सर्वं समुच्चीयते
किंतु क्ष्मावलयार्क तार्किकमते कर्मादिवृन्दं यथा ॥

7. There is the flow of the words of learned men which resembles nectar. Then out of joy there is the movement of the ends of your eyes. Here there is a sequence of cause and effect. After that my place for wealth is filled. This is proper. Yet with the mind all is grasped simultaneously, O sun of the world, just as action and its group in the Logician's theory.

*a.* (विद्वद्वागमृतश्रुतिः)

यद्यप्येतानि उत्तरोत्तरमाविर्भवन्ति तथापि युगपत् प्रवृत्तानीव भान्ति । नैयायिकमते-क्रिया । ततो विभागः । तस्मात् पूर्वदेशसंयोगनाशः । अनन्तरमुत्तरदेशसंयोगः-इति कर्मणः चत्वारोंऽशा वर्तन्ते । तथापि कर्म पिण्डीभूतमेकमेकक्षणावृत्तमिवानुभूयते ।

शार्दूलविक्रीडितं वृत्तम् ।

## VIII

प्रसादं देवानां कतिचन गिरां वा तदपरे
परे राज्ञामाज्ञामनुगतामिमं संजगदिरे।
स्वदारिद्र्यद्रुत्या वयमिह तमन्त्यं मनुमहे
महीबिम्बस्वामिन्ननुमितपरद्वैतघटनम् ॥

8. Some speak of the grace of gods. Others speak of the grace of words. Still others speak of this as following the orders of kings. When being melted in poverty, we think of this last, O lord of the earth orb, out of which the other two are inferred.

शिखरिणी वृत्तम्।

IX

दारिद्र्यग्रीष्मशीर्णः कविरवनिरवे त्वत्करोत्थाम्बुवर्षै-
रूढश्रीस्त्वत्स्मिताभाशरदि सविभवो मञ्जुमुक्ता-
फलौघैः।
हेमार्काभ्यासभूम्ना तरुणमृगदृशां लोलचेलान्तवातै-
र्यातः शैत्यं सुमेषोरपि सहचरतां याति कान्त्या
वसन्ते ॥

O sun of earth, the poet who was emaciated by poverty as by summer, who then had splendour developed by the water from your hand and who had plenty of heaps of pearls through your smiles, who attained coolness by the wind from the ends of the garments of the damsels, after basking freely in the sun of gold, has now become a companion of Kama in spring through lustre.

*a.* द्र्य इति प्रथममुपेक्षितं पश्चात् पत्रस्य दक्षिणप्रान्ते विन्यस्तम्।
*d.* सहच इत्यन्तरं ते इत्येवोपलभ्यते। मध्यं भ्रष्टम्। पाठो ममा-
भ्यूह एव।
हेम सुवर्णमेव अर्कः।
स्रग्धरा वृत्तम्।

X

काव्यक्षीरनिधिं विमथ्य शुभकृत्सारोरगावेष्टित-
प्रज्ञागौरवमन्दराचलचलद्व्यङ्ग्योर्मि किर्मीरितम् ।
दानात् संमुदितैर्धरामरगणैराशीःसुधामुद्धृतां
पीत्वा पूर्णमनूपसिंह धरणीराज्ये चिरं जीवतात् ॥

दानावतारः षष्ठः समाप्तः

10. Having churned poetry as the milky ocean, which is agitated by suggestions as by waves moved by seriousness of thought as by the mount Mandara, wound around by essential meaning producing auspiciousness as by the great serpent, there is the benediction taken out as nectar by the gods of the earth (Brahmins) pleased with gifts; drinking this nectar, may you, O Anupasimha, live long in this earthly country.

*a*. विम इति रोरगा इत्यनयोर्मध्यभागो भ्रष्टः । शुभाङ्कृत्वात् काव्यस्य शुभकृत्सा इति ममाभ्यूहः ।

*b*. गौर इत्यस्यानन्तरं व इति भ्रष्टम् । (किर्मीतः)
शार्दूलविक्रीडितं वृत्तम् ।

# ७

# यशोऽवतारः।

I

चञ्चत्काञ्चनकङ्कणक्षणरुचौ कान्त्या घने त्वत्करे
वर्षत्यर्थकपाणिशुक्तिषु भृशं तत् स्वातिपूर्णं पयः।
माहात्म्यैकगुणाः सुवृत्तशुचयो निर्दूषणाः प्रावृतन्
मुक्ताः कीर्तिकला न को दधदमूः कण्ठे विरोरुच्यताम्॥

1. When your hand heavy with lustre (like a cloud), with the shining golden bangles as lightning, rains down water into the extremely full (or full on svāti) hands of those who ask as into a shell, there appeared pearls with greatness as their individual merit, quite round and shining (or shining with good conduct), free from defects, lustrous with fame. Who wearing them on the neck will not shine?

*b.* सु शोभनं यथा तथा अति पूर्णम्। अथवा स्वातिनक्षत्रे पूर्णम्।
शार्दूलविक्रीडितं वृत्तम्।

II

वीताङ्कादविखण्डितादविचलादश्रान्तमुल्लालस-
द्विद्वन्मानसपङ्कजादरियशःशुभ्रोत्पलप्लोषणात् ।
छत्राचण्डगुमण्डलादजनि ते सर्वत्र निर्व्यापिनी
चक्रायोगहरा भवद्युतिकरी सैषा यशःकौमुदी ॥

2. This fame like moon-light was born from your circular umbrella as from the moon, (but) free from stain, not cut into pieces, not moving, rejoicing the minds of learned men without effort like lotus, fading the fame of enemies like lilies – the fame like moon-light spreading everywhere, bringing about the union of Chakravaka birds (the union of the empire) making lustre on Siva (or on the world).

*c.* अजनि इत्यस्मादुत्तरं ते इत्युपेक्षितम् । पश्चात् पत्रस्य दक्षिणप्रान्ते निविष्टम् ।

कौमुदी पङ्कजं प्लोषयति उत्पलं विकासयति । अत्र तु अन्यथा वृत्तिः । अचण्डगुश्चन्द्रः । चक्रयोः चक्रवाकयोः आयोगं समागमं हरति विघटयति । अथवा चक्रस्य राज्यचक्रस्य आयोगं संपादनं हरति निर्वर्तयति । भवस्य शिवस्य लोकस्य वा ।

शार्दूलविक्रीडितं वृत्तम् ।

III

किं ते भूप कटाक्षगौरिमगुणो जैत्रश्रियो वा स्मितं
किं राज्यद्विपकुम्भमौक्तिकलता किं धर्महंसावलिः ।
त्वन्मेधासुकृतक्षितेः सुरसरित् किं वाथ किं भूभृतां
माला मूर्धनि मालतीविमलिमा किं कीर्तिरेषा तव ॥

3. O king, is it the quality of redness in your eye? Is it the smile of the lustre of victory? Is it the pearl-string on the forehead of the kingdom as of an elephant? Is it a row of virtues as of swans? Is it the celestial river in the region of your intellect as in the land of the virtuous? Or again, is it the garland with the purity of jasmine on the head of the kings? Or is it your fame?

*d.* मालतीविमलिमा इति नितरामस्पष्टम् ।

शार्दूलविक्रीडितं वृत्तम् ।

IV

दयः कं प्रभुः
क्षाम्येत् कीर्तिसि ति नो रूपे हृता किं परैः
तान् धूनोमि न नापि किं तव यशोबिम्बै रहो वर्धितं
मिथ्यादूत वयं वयं सुकवयः सत्याः समे साक्षिणः ॥

(भ्रष्टश्चास्पष्टश्च)

शार्दूलविक्रीडितं वृत्तम्।

किं भूमण्डलमावृणोति न न वानन्तं समालम्बते
जातश्रीरपिवा न किं नवसुधासंभावितो वा
न किम् ।
कीर्तिक्षीरनिधिस्तथापि तनुते क्षीराब्धिरन्यः प्लुतिं
चेदस्त्यच्युतसारतेति नृरते सापीह नैवास्ति किम् ॥

5. Does not your fame as the milk ocean surround the earth? Does it not resort to infinity (or Ananta)? Is not Sree born of it? Is it not honoured by new nectar (or honoured like new nectar)? Even then if the milk ocean boasts of its Achyutasarata, *i.e.*, having the greatness of (possessing) Vishnu has not this (your fame) Achyutasarata (undiminishing greatness) also?

शार्दूलविक्रीडितं वृत्तम् ।

## VI

तारासीमन्तितश्रीगगनकचभरा मन्दमान्दोलयन्ता-
माशावेतण्डगण्डध्वनदलिवलयालोलझंकारमञ्जु ।
त्वत्प्रासादाग्रजाग्रद्ध्वजकनकलताग्रचन्द्रातपत्र-
प्रान्तान्येताः समेताः सुदृश इव दिशस्ते यश-
श्चामराणि ॥

6. May the quarters like damsels gently swing your fame as Chamaras having the moon as an umbrella at the end, fixed on the golden pole of the flags keeping watch on the top of your mansions, the swinging made beautiful by the humming sound of the bees as of bangles, making noise on the cheeks of the elephants of the quarters; the damsels having the sky as the heavy knots of hair with stars as partings.

c. ध्वजदण्डाग्रस्थितश्चन्द्रः सितछत्रत्वेन निरूप्यते । प्रासादानामुन्नतिश्च व्यज्यते ।

स्रग्धरा वृत्तम् ।

VII

चण्डी तावकमण्डलाग्रसरणिं योपास्य लास्यानुगा
व्रीडां प्रास्य पुरस्तवैवमकरोत् क्रीडां यशोमण्डली ।
प्राग्भूभृच्छिखराङ्गुलीकृतकिणामुच्चालयन्ती विधु-
स्थालीं तारकमौक्तिकैश्च भवता कीर्णां नु संतुष्यता ॥

7. The fame-circle as a bold damsel (Chandi) taking up her position on the end of your sword as on a path, following the dance, casting off shyness, performed a sport in your very presence, throwing up the moon as a plate on which there was a stain produced by the peaks of the eastern mountain as by a finger, decorated by you with the stars as with pearls, when you were pleased.

c. (उच्छालयन्ती)
प्राग्भूभृत् उदयगिरिः ।
शार्दूलविक्रीडितं वृत्तम् ।

## VIII

उत्पन्ना भवता समं प्रचरिता सद्भिश्चरित्रैरहो
राज्येनापि च साकमास्थितवती रूढिं त्रिलोकीतले।
सार्धं चैव पराक्रमैः समकृतैः प्राप्ता परामुन्नतिं
. . . . . मिता गुणैः कीर्तिस्तव क्ष्मापते ॥

8. Born along with you, brought up with virtuous conduct, placed by your side along with the kingdom also, on a footing of safety in the three world, with valourous deeds performed in collaboration having attained to a high position, associated with virtues, O king, your fame shines.

*a*. चरित्रै समं इति प्रथमं लिखितम्। समं इत्यस्य संमार्जनं कृत्वा अनन्तरं रहो इति लिखितम्।

*c*. क्र स इति समस्तं मध्ये मैः इति भूरिशश्च भ्रष्टानि।

*d*. आदौ चत्वार्यक्षराणि नष्टानि। ऐकारोत्तरं तृतीयमक्षरमिति उर्ध्वभागाल्लक्ष्यते। मिता इति स्पष्टम्। गुणाः इत्येव स्पष्टम्। अनन्तरमक्षरं प्रभ्रष्टम्। ततः ऋकारसहितमक्षरं अनन्तमुकारसहितं चाक्षरमिति अधोभागाल्लक्ष्यते। अनन्तरं चाक्षरं प्रभ्रष्टम्।

शार्दूलविक्रीडितं वृत्तम्।

IX

अ                 वक्तुं नरपतियशो नेदमुचितं
कृतारम्भं वाचा कलयति न चान्तं तदपि ते ।
तथापि श्लोकेषु स्वमतिमहिमानं विशदये
महामानं न स्यात् सहृदयमुदां वृन्दमिह किम् ॥

9. It is not proper to speak of the fame of the king; when it is started with words, that (fame) of yours does not come to an end. Still I make clear the greatness of my mind through these verses. Will not the heap of the joy of the critics be the great test in this case?

*a.* आदौ अकारः स्पष्टः । त्रीण्यक्षराणि नष्टानि ।
*c.* आदौ त इति नष्टम् ।
शिखरिणी वृत्तम् ।

X

कीर्तिः सत्यमनूपसिंह धवलाद्वैतं तथापि स्फुटं
भासन्ते दुरपह्नवाः शुभगुणास्तत्रेदमङ्गीकुरु।
ब्रह्मैवेति निगर्वितेऽपि च यथा भ्रान्त्यैव वैकारिका
भूमीपाल तथेदमत्र विदुषां मानं मनोवृत्तयः॥

यशोऽवतारः सप्तमः समाप्तः।

10. O Anupasimha, it is true that fame is unmixed white; the auspicious qualities reflect on it clearly, difficult to be denied. But just as in what is firmly believed to be Brahman, the transformations shine as mere illusions, your auspicious qualities which assert themselves reflect on it (the unmixed whiteness of fame). The mental reactions of scholars is the index of this fact.

b. (परगुणाः) अत्र शुभपदं न दृश्यते इति परगुणा इत्यस्य स्थाने शुभगुणाः इति मया निविष्टम्।

शार्दूलविक्रीडितं वृत्तम्।

# ८

## धर्मावतारः।

I

त्वत्कीर्त्या सुधया मुहुर्विमलितं मेरुं महादर्पणं
चुम्बंस्त्वत्प्रतिबिम्ब एष दधते जम्भारिसंभावनाम्।
बिम्बस्यापि तवाथ धर्ममखिलं त्राणादिमप्राप्नुवन्
सत्यश्चेदुदितोऽपि सम्प्रति न किं भाषेत हासं प्रति॥

1. Touching the Meru as a big mirror constantly polished by your fame as by nectar, your reflection takes the appellation of Indra. Even if he should rise up in reality, what will he say about the laughter when he has not got even the virtues of protecting, etc., that are in your image.

शार्दूलविक्रीडितं वृत्तम्।

II

ध्वान्तं विध्यन् नितान्तं मलिनिमजनको
नैव संतापदो वा
निर्वाणं नैति सर्वावयवसमरुचिः स्नेहहानिं
न याति।
मान्द्यं वा मित्रमोदे न वहति च नव-
क्ष्मामहेन्द्र त्वदीयो
धर्मोऽयं पात्रशर्मा जगति विजयते
जाम्बवद्वीपदीप ॥

2. Removing darkness always, not producing stain nor even giving heat (or sorrow), it does not go out; it has equal lustre throughout its limbs; does not exhaust sneha (oil and friendliness); it does not take up fadedness (or slowness) when there is joy for the sun (or in the matter of giving joy to a friend); O new Lord of the earth, such your virtue, giving good to the deserving (or remaining in a vessel) reigns supreme, O light of the Jambu island.

*d.* (जांबंव)
स्नेहः प्रेम तैलं वा। मित्रं सुहृत्। मित्रः सूर्यः।
स्रग्धरा वृत्तम्।

III

धर्मो प्राप्यदक्षोद्भवा
लक्ष्मीका ती वश्यक्रियाकोविदम्।
तां राजन्यरतिः समाश्रितवती पुत्रावसावीदसौ
रम्यौ शीलशुचिप्रभौ किल यशोहर्षौ च लीलोद्धृतौ॥

( त्रुटितश्चास्पष्टश्च )

शार्दूलविक्रीडितं वृत्तम्।

## IV

यः सूरान्वयमण्डनं तदनु यः कर्णस्य सूनुस्तथा
यो दक्षार्हणयोगवानथ च यः सर्वात्मसुभ्राजितः।
सर्वे ते भवदात्मतामनुगता नानूपसिंहप्रभो
किं तावत् कथमन्यथा त्वयि महीयन्ते तदीया गुणाः ॥

4. Who is an ornament in the dynasty of Sura (sun or Sursingh); who is similarly the son of Karna (Karansingh); who is associated with the honour of Daksha (the clever people or Daksha Prajapati); who is illuminated in his entire body; have all of them followed up your nature, O Lord Anupasimha? Otherwise how do their qualities shine in you?

*d.* त्वयि मणीयन्ते।

सूरस्य सूरसिंहस्य सूर्यस्य वा अन्वयः। दक्षाणां दक्षप्रजापतेर्वा।

शार्दूलविक्रीडितं वृत्तम्।

V

सान्निध्यं न विमुच्यते घनरसैस्त्वत्पाणिमालम्बते
प्रेमाकैतवमश्नुते प्रतिलवं रक्षां विधत्ते तव ।
त्वामानन्दयति प्रियोपहरणैर्वासं तनोत्याशये
भूप श्रीमदनूपसिंह वहते धर्मः सुहृत्त्वं त्वयि ॥

5. It does not abandon your proximity; it resorts to your hand with thick joy; it produces love which is not artificial; it produces safety for you every moment; it pleases you by bringing what is desired; it takes up its abode in your heart; O king Anupasimha, your virtue functions like a friend.

शार्दूलविक्रीडितं वृत्तम् ।

VI

सामाप्तौ कमलासनो वितरणेऽप्यालम्बते गौरवं
भेदेऽप्यच्युततां गतः करविधावुग्रः शुचिः पालने ।
संग्रामे शरजन्मतां च गतवान् यातश्च नासत्यतां
धर्मः श्रीमदनूपसिंह नृपते देवात्मकस्तावकः ॥

6. Seated on a lotus in acquiring Sama (Samaveda or Samanaya); attains Gaurava (nature of Brihaspati or heaviness) in giving away; there is achyutata (nature of Vishnu or non-destruction) even in Bheda (splitting or bhedanaya); Ugra (fierce or Siva) in acting with his hand (dandanaya); Suci (clean or fire) in protection; being sarajanma (subrahmanya or born from arrows) in battle; becoming *nasatyata* (Asvins or non falsehood); O king Anupasimha, your virtue has the nature of gods.

*d.* श्रीमदनूसिंह इत्येव लिखितम् । अपेक्षितः पकारः पत्रस्य उपरिभागे पश्चान्निविष्टः ।

ब्रह्मा बृहस्पतिः विष्णुः शिवः अग्निः षडाननः अश्विनौ चात्र निर्दिष्टाः । सामदानभेददण्डाश्च उपात्ताः ।

शार्दूलविक्रीडितं वृत्तम् ।

VII

जातो विक्रमसंततौ पुनरितो धन्वाश्रयं सर्वदा
विस्तृण्वन् भुवि राजसिंह विभवं वामोत्तमाङ्गावृतिः।
सूरादिः किल कर्णवर्णितभवो धर्मो धरित्रीभुजां
त्वं चानूप महीमहेन्द्र युवयोर्भेदः कथं वेद्यताम् ॥

7. Born in the dynasty of Vikrama (or in the succession of valourous deeds); then having resorted to the Desert region (or bow); always spreading prosperity in the world; O lion of kings, having a beautiful head-gear (covering up the heads of the misbehaved); having the source in Sura (Sursingh or Soma); with production described by kings as from Karna (Karansingh or described in the ears of kings); your virtue and yourself are both so. O Anupa, the Lord of the earth, how can your difference be detected?

विक्रमस्य भूपतेः संततिः वंशः। विक्रमाणां पराक्रमाणां संततिः विस्तारश्च। धन्वनः मरुदेशस्य धनोः धनुषश्च आश्रयम्। वामा शोभमाना उत्तमाङ्गस्य शिरसःआवृतिः आवरणं यस्य। वामानां दुश्चरितानां उत्तमाङ्गानि आवृणवन्ति इति।
सूरः सूरसिंहः सोमयागो वा आदिः उत्पत्तिस्थानं यस्य। धरित्रीभुजां कर्णेषु वर्णितः भवः उत्पत्तिः यस्य। धरित्रीभुजां कर्णेन कर्णसिंहेन वर्णितः भवः आविर्भावः यस्य सः अनूपसिंहः।
शार्दूलविक्रीडितं वृत्तम्।

VIII

यैर्वर्ण्यं रजतेष्वनिन्यथ न
पुस्तकलिपौ शास्त्रे छलं तार्किके।
ऽपिच गदासङ्गः करे शार्ङ्गिणः
पाति क्षोणिमनूपासिंहनृरतौ धर्मैकवर्मत्विषि ॥

(त्रुटितश्चास्पष्टश्च)

शार्दूलविक्रीडितं वृत्तम्।

IX

नैवास्ते कलिरेष किं खलु कृतं कस्मात् कृतं यत् क्षिति-
स्वाराजा सुकृतं चतुष्पदमिह स्थेमानमामानयत् ।
नोचेत् किं नरसिंह एष कलयन् प्रह्लादमासान्त्वनैः
प्रोत्साहैर्नखरैर्हिरण्यकशिपोर्दानं करोति स्फुटम् ॥

9. This is certainly not Kali. What then? It is Krita; How is it Krita? Because it has measured its steady prosperity with four legs well produced by you who are the Lord of the earth. If not how is this Narasimha (the lion among men or man-lion), producing (or paying heed to) joy (or Prahlada), with consolings and with encouragements not harsh (nakhara), is plainly performing the Dana (splitting up or gift) of Hiranyakasipu (or gold and clothing), with claws (nakhara)?

कृते धर्मः चतुष्पदः अवतिष्ठते । नराणां सिंहः नरश्चासौ सिंहश्चः नरसिंहः । कलयन् उत्पादयन् अवेक्षमाणश्च । प्रह्लादं संतोषं प्रह्लादनामानंवा । नखरैः न खरैः नखैर्वा । कशिपुः वस्त्रम् । दानं विदलनं वितरणं च ।

शार्दूलविक्रीडितं वृत्तम् ।

X

बीजाद्दानजपादिनो घनरसैः सिक्तादुदीतः पुरा
यो रागाङ्कुररूपमाप धृतिचिच्चित्रां द्विपत्रीमपि ।
अन्योन्येषु यशोऽनुवर्णनरुचीः शाखाः शुभाः कौसुमै-
रुल्लासैः सुकृतागमो जयति यच्छाये जनो जीवति ॥

धर्मावतारोऽष्टमः समाप्तः ।

10. First produced from gifts and chantings as from seeds sprinkled with profuse water (or joy); it has acquired a form in love as sprout, then beautiful steadiness and knowledge as two leaves, branches that are auspicious with the play of flowers and shining with the description of fame in one another; your good deeds reign supreme in this way. In its shadow live the men.

*b.* ( धृतिचिच्चित्रां )
धृतिश्च चित् च ताभ्यां चित्रां ।
शार्दूलविक्रीडितं वृत्तम् ।

# भक्त्यवतारः ।

I

भूप श्रीमदनूपसिंह भवतो हृद्भावतो मङ्गलं
सर्वाङ्गं तनुतादविघ्नघटनाजङ्गालसङ्गाजकः ।
वंशीवाचिसुनैचिकीरुपवदन् हेमांशुकावेष्टितो
वृन्दाकाननकुञ्जकुञ्जरशिरःसिन्दूररागो हरिः ॥

1. O Anupasimha the king, may Hari (lion also) out of your mental meditation produce auspiciousness throughout; Hari who is active in the bringing together of the antelopes of non-obstruction, sounding the low tunes produced on the flute, clothed in silk of gold, and pink with sindura powder from the heads of the bowers, as of elephants, in the Vrinda forest.

*b.* (संघालकः)

अविघ्नघटनारूपजङ्गालान् अजति प्रेरयति ।

शार्दूलविक्रीडितं वृत्तम् ।

II

कृष्णः कन्दुकशीलनेषु तरसा राधाकराधावितं
प्रा                    कलयितुं यत्पाणिमाधारितम्।
साधारण्य                    ते समाधायि तत्
तुभ्यं श्रीमदनूप                    यद्गीतिबाधामपि॥

(त्रुटितश्चास्पष्टश्च)

शार्दूलविक्रीडितं वृत्तम्।

III

यः पूर्वं मृदुमन्त्रजापसुकृतैरन्वर्चितः प्राभृतैः
श्रीरत्नप्रभृतिप्रचारणचणैः षोढानपोढावृतिः ।
संपूज्योऽपि समण्डलप्रमुदितो वृन्दावनाखण्डलः
सोऽयं नित्यमनूपसिंह नृपते शास्तात् त्रिवर्गं तव ॥

3. Who was first worshipped with presents well made with soft chanting of Mantras, who is awakened six times by those who are experts in operating Sree Ratna and others, that Indra of Vrndavana who is fit to be well worshipped and who is pleased along with the circle, may he protect your three-fold goals, O Anupasimha.

*b.* अपोढो होना is Marwari for getting up.

शार्दूलविक्रीडितं वृत्तम् ।

IV

गणमिव गणयन्ते नैधिकं हस्तशाखा
वितरितुमथ भक्ते यस्य गोपालमूर्तेः ।
शमयतु हृदि तापं पापनिर्वाणहेतु-
स्तदधरमधुवंशीभूतवंशीनिनादः ॥

4. Of which Gopala-form the hands resembling branches seem as though the groups of treasures to be given to the devotee, may his flute-sound which is of the same origin as the nectar of his lips, and which is the cause of the destruction of sins, extinguish the pain in my heart.

मालिनी वृत्तम् ।

V

अविकलितजपादि ध्यानधाराधुरीणं
मधुविदलनपूजादर्शनं ते महीन्द्र ।
अवतरति न भेदं नापि सन्देहखेदं
भ्रमरसाविनिवेदं नाप्यभेदं न चैव ॥

5. O Lord of the earth, your vision of the destroyer of Madhu (Sree Krishna) during worship, with flawless chantings, etc., steady in the succession of meditation, does not enter into difference, nor into the pain of doubt, nor into nescience which is the essence of illusion, nor even into non-difference.

c. (अचकथतन भेदं)
मालिनी वृत्तम् ।

VI

नृप भवदुपनीतं पीतवासोऽवहद्यो
धृतकुसुमकदम्बं कम्बुनालम्बिताम्बु ।
अदितहसितमुक्ताहारवारं प्रसीदन्
कथमयमिह न स्यात् त्वत्करार्घो महार्घः ॥

6. When he takes up a yellow robe brought by you, the bundle of flowers held (by you), the water contained in the conch and the heap of flawless smile as of pearls, how can he not be pleased? The presents from you are of great value.

*a.* पीतवासावहन्यं ।

*b.* कुसुमसमू इति विलिख्य समू इत्यस्य संमार्जनं कृत्वा कदंबं इति लिखितम् ।

मालिनी वृत्तम् ।

VII

आधातुमच्युतगले भवता गृहीतं
वीक्ष्यानुबिम्बमथ दाम करान्तमुक्तम्।
ध्यातं प्रसादविधयात्र परैश्च दाम
मुक्तं त्वयाद्भुतभृतैरिति मे विचित्रम्॥

7. The garland taken by you to put it on the neck of Achyuta, was dropped from your hands seeing your own image. The garland dropped by you was, for the purpose of propitiation, meditated upon by even others who were wonderstruck. This is a wonder to me.

NOTE. – The idea is that the others regarded the garland dropped by him as a mark of favour conferred by the Maharaja.

*d.* (त्वयाद्भुतकितैरिति)
वसन्ततिलकं वृत्तम्

VIII

मुक्तालतां हृदयशुद्धिमिव व्यतारीः
पुष्पाञ्जलिं निजमनोरथधोरणीं नु ।
रत्नोच्चयानपि हरौ किमु चित्तहर्षान्
स्वान्तानुरागमिव कुङ्कुमरागमेव ।

8. You have offered to Hari a string of pearls resembling the purity of your heart, a handful of flowers as an uninterrupted succession of your own wishes, highly valued gems as the joys of heart and the redness of Kunkuma like your own heart's love.

वसन्ततिलकं वृत्तम्

IX

एत वलम्ब्य
ताम्बूलभुषणमपिप्रति
सभां प्रतियातुकामे
दामोदरे वासः ॥

( त्रुटितश्चास्पष्टश्च )

वसंततिलकं वृत्तम्।

X

अर्चां प्रचार्य चितचन्दनचन्द्रचर्चां
त्वय्यागते नु निजराजसभां प्रभाते ।
कृष्णाग्रतोऽधिमणिमेदिनि रक्षणार्थं
दण्डानतिः शुभमयादनुबिम्बनं ते ॥

भक्त्यवतारो नवमः समाप्तः ।

10. After performing the worship with sandal paste, when you entered your own royal assembly in the morning your own auspicious reflection on the floor made of gems became your prostration before Krishna for protection.

*a.* निजरा इति सभां इत्यनयोर्मध्ये अक्षरं भ्रष्टम् ।
*b.* ( मेदिनि नक्षमार्थं )
वसन्ततिलकं वृत्तम् ।

## १०

# अभयावतारः ।

I

सम्यग्बुधेन गुरुणा कविना च दृष्टः
स्पृष्टो न मन्दवदनैरधिरूढकर्कः ।
भूमीमृगाङ्क तनुषे यदनूपसिंह
भव्यं भवेदिह कथं मम चित्तचिन्ता ॥

1. Well viewed by the wise (Mercury also), by the teacher (by Jupitar also), by the poet (by Venus also), not touched by the faces of the stupid (Saturn also), riding on a white horse (ascending the fourth sign of the zodiac also), O moon of the earth, you produce fortune, O Anupasimha; here how can there be any doubt regarding this in my mind?

कर्कः चतुर्थो राशिः अश्वश्च
वसन्ततिलकं वृत्तम् ।

II

मोदं मोदमशिश्रियन् निजमहापूजादरादेशना-
द्भाण्डागारमभीतिसञ्चयमयं तुभ्यं स लक्ष्मीपतिः।
येन श्रीमदनूपसिंह धरणीसौवर्गचूडामणे
नित्यं नाम ददासि दानमहसामिभ्यः समेभ्यो-
ऽभयम् ॥

2. That lord of Lakshmi has made for you a treasure of refuge in heaps, seeing your devotion to his great worship, with constant joy; whereby, O Anupasimha, the crestjewel of the highborn in the world, you daily give refuge from equals to those who shine with gifts, being rich yourself.

*a.* (अशिश्रयान्)

शार्दूलविक्रीडितं वृत्तम्

III

प्रद्युम्ननान्दकसुदर्शनकामपाल-
लक्ष्मीभुजङ्गभरभञ्जनपद्मशङ्खान् ।
पात्रे निधाय भवति प्रियभक्तमात्रे
जायेत सोऽभयकरो न कथं मुरारिः ॥

3. Pradyumna (Kama and lustre), Nandaka (Vishnu's sword and what is pleasing), Sudarsana (the Chakra and beautiful to look at), Kamapala (Balabhadra and keeper of wishes), Lakshmi (the goddess and wealth), Bhujangabharabhanjana (what breaks the weight of the wicked or the bed of snake and the breaking club), Lotus and Sankha—placing these in you who are a deserving receptacle, and who is merely a dear devotee, how will Murari be not the giver of refuge?

*a.* (साभयकरो)

वसन्ततिलकं वृत्तम् ।

IV

यस्माद्रागनशात् तमस्तमनिशं यत् सुप्रकाशं दधे
जातं यत् करुणाम्बुधेस्तदभयं माणिक्यचूडामणिम्।
दायमिव यन्मोदेन शेतेतमा
शौ किमिह त्वं नाम देदीप्यसे ॥

(त्रुटितश्चास्पष्टश्च)

शार्दूलविक्रीडितं वृत्तम्

V

अभया भवन्ति शरणं यदागता
यदनूपसिंह भवतीति नाद्भुतम् ।
अभयं तु हन्त सभयं विभाव्यते
न मनाग्विचित्रमिदमानशे मनः ॥

5. When people come to you for refuge, they are freed from fear; here there is no wonder. But the word abhaya (freedom from fear) appears as having the syllables bhaya (fear). This wonder the mind does not comprehend.

*d.* न म इत्यनन्तरं ना इति अष्टम।
अभयं अभयं इति पदम्। सभयं भयशब्दसहितम
मञ्जुभाषिणी वृत्तम्।

## VI

समलम्भि निक्षयनिषङ्गता पुरा
विजयेन तेन किल कृष्णवर्त्मनः।
भवताप्यनूपधरणीबिडौजसा
निबिडौजसाक्षयतराभयप्रभा ॥

6. Formerly from Krishnavartman (fire) an inexhaustible arrow case was obtained by Arjuna. Now from Krishnavartman (the path of Krishna) a more inexhaustible refuge was obtained by you who are an Indra on the earth and who has dense prowess.

*d.* (निबिडौजसाक्षतराभयप्रभा) अत्र रा इत्यस्योपरि उपेक्षिताक्षरद्योतनाय १ इति चिह्नं वर्तते। यदि प्रान्तदेशे तन्निविष्टं इदानीं तन्नष्टम्।

मञ्जुभाषिणी वृत्तम्।

VII

श्रीमद्धन्वधरामराधिप पुरं श्रीविक्रमक्ष्मापते-
रध्यास्य प्रथमानचण्डिममहासेनानुयातः सदा ।
अङ्गानीतशिवोदयः प्रतिमहाकालोऽसि धर्मद्रुहः
को वा मालवमल्लभीतिहरणे नेनेक्ति नो संशयम् ॥

7. O Indra of the Desert Region, occupying the city of Vikrama (Bika and Vikramaditya) followed by the great army (or Mahasena the king of Ujjain) with renowned fierceness, having the rise of prosperity (or of Siva) brought into his entire body, you are a rival Mahakala for those who destroy virtue; who will not cast off the doubt in regard to the removal of fear from the mallas of Malwa?

*d.* ( मालवमन्वभीतिभरणे )

महती सेना । तया अनुयातः महासेनानुयातः । महासेनेन मालवराजेन कार्तिकेयेन वानुयातश्च । अङ्गेषु आनीतः शिवस्य मङ्गलस्य उदयः यस्य ।

शार्दूलविक्रीडितं वृत्तम् ।

## VIII

सङ्ग्रामाजयमिन्दिराविरहणं ग्रामावनीविच्युतिं
साग्रामापदुदञ्चनां विदलितग्रामाटवीझाङ्कृतिम्।
भूयोऽसावनुबोभवीति न रिपू राजंस्त्वया भीषित-
स्तज्ज्ञातं फलतोऽभयं भयमिति त्वत्तोऽभयं नोभयम्॥

8. Defeat in battle, separation from wealth, loss of village and land, the rise of adversity having a continuity, tumult in the forest from whom the village was taken away; this enemy will no more suffer these, being frightened by you, O king. I have known that refuge and fear are from results. From you there is only refuge, not both.

शार्दूलविक्रीडितं वृत्तम्।

IX

भूमौ माकिरभूत् स्रवः कलुषतो येषामतोऽनुत्सव-
स्ते प्राणान् न हि धित्सवस्त्रिदिवतो जाताः
सुराः पित्सवः।
तेभ्यो धर्मधुरंधरेण भवता नानूपसिंहप्रभो
किं व्य मभीतिभरणं नृणामथो
का कथा॥

(अस्पष्टः)

शार्दूलविक्रीडितं वृत्तम्।

X

गोवृन्दारकवन्दिते जयसखे मूर्धस्फुरच्चन्द्रके
चञ्चच्चारणदेवसिन्धुयमुने पञ्चास्यकान्त्या शुभे।
वामाङ्गीकृतसर्वमङ्गलतनौ ग्रीवासितश्रीवहे
कामोद्धारकरे हरे त्वयि ममामन्दं मनो मोदताम्॥

अभयावतारो दशमः समाप्तः।

10. May my mind find joy in you as in Hara, worshipped by the gods of earth, *i.e.*, by Brahmins (or by cows and gods), having victory (or Jaya) as friend, with Chandraka (peacock's feather or small moon) shining in the head, having Ganges (devasindhu) and Yamuna where the Charanas (divine beings or spies) move about, auspicious with the grace of the five-faced (lion or Siva), with the body full of auspiciousness accepted by beautiful damsels (or whose left side is converted into the body of Parvati), wearing white lustre on the head (or wearing dark beauty on the neck) bringing up desires (or destroying Kama).

*b.* चञ्चचा इति शादेव इत्यनयोर्मध्ये अक्षरं भ्रष्टम्। अधोभागादिदं र इतिवन्न लक्ष्यते। परंतु क इतिवद्विभाव्यते। अनुरूप इति रेफः स्वीकृतः। (यमने)

वामाभिरङ्गीकृता सर्वमङ्गला संपूर्णशुभा तनूः यस्य। वामाङ्गीकृतं सर्वमङ्गलायाः पार्वत्याः तनूः येन।

शार्दूलविक्रीडितं वृत्तम्।